॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तस्येदम्

## हलन्तपुल्लिँङ्गप्रकरणम्



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**


डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेविका संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं।

दिनाङ्कः-

22.12.2020

अस्माकं सम्पर्कसूत्राणि—

e-mail अणुवाक्— samskritsaarah@gmail.com

ह्वाट्सैप्— ८८९९१८७९२९ (भवतां परामर्शानां स्वागतम्)

YOUTUBE — संस्कृतसारः @sanskrit sar

FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

(सम्पर्कसूत्रम्-9424692199)

sanskritshiksha2020@gmail.com

# हलन्ते पुल्लिङ्गाः

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

## ह्



१.लिह्
२.दुह्
३.द्रुह्-आदि
४.विश्ववाह्
५.अनडुह्
६.तुरासाह्

## व्



१.सुदिव्

## र्



१.चतुर्

## म्



१.प्रशाम्
२.किम्
३.इदम्

## न्



१.राजन्
२.यज्वन्
३.ब्रह्मन्
४.वृत्रहन्
५.शार्ङ्गिन्
६.यशस्विन्
७.अर्यमन्
८.पूषन्
९. मघवन्
१०.श्वन्
११.युवन्
१२.अर्वन्
१३.पथिन्
१४.मथिन्
१५.ऋभुक्षिन्
१६.पञ्चन्
(सप्तन्)
१७.अष्टन्
(नवन्)
(दशन्)

## ज्



१.ऋत्विज्
२.युज्
३.सुयुज्
४.खञ्ज्
५.राज् (विभ्राज्, देवेज्,विश्वसृज्)
६.परिव्राज्
७.भृस्ज्

## द्



१.त्यद्
२.तद्
३.यद्
४.एतद्
५.युष्मद्
६.अस्मद्
७.सुपाद्

## थ्



१.अग्निमथ्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हलन्ते पुंल्लिङ्गाः

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

## च्



१.प्राच्—प्राञ्च्
२. प्रत्यच्—प्रत्यञ्च्
३. उदच्—उदञ्च्
४. सम्यच्—सम्यञ्च्
५. सध्र्यच्—सध्र्यञ्च्
६. तिर्यच्—तिर्यञ्च्
७.क्रुञ्च्
८.पयोमुच्

## त्



१.महत्
२.धीमत्
३.भवत्-२
४.ददत्
५. जक्षत्
६.दरिद्रत्
७.शासत्
८.चकासत्

## प्



१.गुप्

## श्



१.तादृश्
२.विश्
३.नश्
४.घृतस्पृश्

## ष्



१.दधृष्
२.रत्नमुष्
३.षष्
४.पिपठिष्
५.चिकीर्ष्

## स्



१.विद्वस्
२.पुंस्
३.उशनस्
४.अनेहस्
५.वेधस्
६.अदस्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'लिह्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | लिट्, लिड् | लिह् + औ = लिहौ | लिह् + अस् = लिहः |
| सम्बोधनम् | हे लिट्, हे लिड् | हे लिहौ | हे लिहः |
| द्वितीया | लिह् + अम् = लिहम् | लिहौ | लिहः |
| तृतीया | लिह् + आ = लिहा | लिह् /ढ्/ड्+ भ्याम् = लिड्भ्याम् | लिड्भिः |
| चतुर्थी | लिह् + ए = लिहे | लिड्भ्याम् | लिड्भ्यः |
| पञ्चमी | लिह् + अस् = लिहः | लिड्भ्याम् | लिड्भ्यः |
| षष्ठी | लिह् + अस् = लिहः | लिह् + ओस् = लिहोः | लिह् + आम् = लिहाम् |
| सप्तमी | लिह् + इ = लिहि | लिह् + ओस् = लिहोः | 1.लिट्त्सु ,2.लिट्सु |

- सूत्रम्- हो ढः॥ (८,२.३१)
- सूत्रार्थः- हस्य ढः स्याज्झलि पदान्ते च।
- लिट्, लिड्। लिहौ। लिहः। लिड्भ्याम्। लिट्त्सु, लिट्सु॥

लिह् (प्रातिपदिकसञ्ज्ञा)
लिह्+ सु (हल्ङ्याब्भ्यो..)
(सुप्तिङन्तं पदम्)
लिह् (हो ढः)
लिढ् (झलां जशोऽन्ते)
लिड् (वाऽवसाने)
1.लिट् ,2.लिड्

(सुप्तिङन्तं पदम्)
लिह् + सु (प्)
(स्वादिष्वसर्वनामस्थाने)
लिह्+ सु (हो ढः)
लिढ्+ सु (झलां जशोऽन्ते)
लिड् ध्+ सु (ड: सि धुँट्)
लिड् ध्+ सु (खरि च)
लिट् त्+ सु (खरि च)
1.लिट्त्सु ,2.लिट्सु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु ‘दुह्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धुक्, धुग् | दुह् + औ = दुहौ | दुह् + अस् = दुहः |
| सम्बोधनम् | हे धुक्, हे धुग् | हे दुहौ | हे दुहः |
| द्वितीया | दुह् + अम् = दुहम् | दुहौ | दुहः |
| तृतीया | दुह् + आ = दुहा | दु(धु)ह् /घ्/ग्+ भ्याम् = धुग्भ्याम् | धुग्भिः |
| चतुर्थी | दुह् + ए = दुहे | धुग्भ्याम् | धुग्भ्यः |
| पञ्चमी | दुह् + अस् = दुहः | धुग्भ्याम् | धुग्भ्यः |
| षष्ठी | दुह् + अस् = दुहः | दुह् + ओस् = दुहोः | दुह् + आम् = दुहाम् |
| सप्तमी | दुह् + इ = दुहि | दुह् + ओस् = दुहोः | धुक्षु |

❖ सूत्रम्- दादेर्धातोर्घः॥ (८,२.३२)

❖ सूत्रार्थः- झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः॥

दुह्+ स् (हल्ङ्याभ्यो..)
दुघ् (दादेर्धातोर्घः)
धुघ् (एकाचो बशो ..)
धुग् (झलां जशोऽन्ते)
धुक् (वाऽवसाने)
1.धुक् ,2. धुग्

दुह् + सु (प)
दुघ्+ सु (दादेर्धातोर्घः)
धुघ्+ सु (एकाचो बशो ..)
धुग्+ सु (झलां जशोऽन्ते)
धुक्+ सु (खरि र)
धुक्+ षु (आदेशप्रत्ययोः)
धुक्षु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

- सूत्रम्- **एकाचो बशो भष् झषन्तस्य स्ध्वोः॥ (८,२.३७)**
- सूत्रार्थः- धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च।
- धुक्, धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु॥

# लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

धातुः — गर्दभ्

धातोर्-अवयव एकाचः — दभ्

धातोर्-अवयव एकाचो झषन्तः — दभ्

व्यपदेशिवद्भावं विना सूत्रप्रवृत्तिः



ब् ग् ड् द्

भ् घ् ढ् ध्

स्
ध्व
पदान्ते

धातुः — दुह्

धातोर्-अवयव एकाचः — दुह्

धातोर्-अवयव एकाचो झषन्तः व्यपदेशिवद्भावेन — दुह्

व्यपदेशिवद्भावेन सूत्रप्रवृत्तिः

व्यपदेशिवद्भावः- अमुख्ये मुख्यवद्व्यवहारः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'द्रुह्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ध्रुक्, ध्रुग् ध्रुट्, ध्रुड् | द्रुह् + औ = द्रुहौ | द्रुह् + अस् = द्रुहः |
| सम्बोधनम् | हे ध्रुक्, हे ध्रुग् हे ध्रुट्, हे ध्रुड् | हे द्रुहौ | हे द्रुहः |
| द्वितीया | द्रुह् + अम् = द्रुहम् | द्रुहौ | द्रुहः |
| तृतीया | द्रुह् + आ = द्रुहा | ध्रुग्भ्याम्, ध्रुड्भ्याम् | ध्रुग्भिः, ध्रुड्भिः |
| चतुर्थी | द्रुह् + ए = द्रुहे | ध्रुग्भ्याम्, ध्रुड्भ्याम् | ध्रुग्भ्यः, ध्रुड्भ्यः |
| पञ्चमी | द्रुह् + अस् = द्रुहः | ध्रुग्भ्याम्, ध्रुड्भ्याम् | ध्रुग्भ्यः, ध्रुड्भ्यः |
| षष्ठी | द्रुह् + अस् = द्रुहः | द्रुह् + ओस् = द्रुहोः | द्रुह् + आम् = द्रुहाम् |
| सप्तमी | द्रुह् + इ = द्रुहि | द्रुह् + ओस् = द्रुहोः | ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु |

❖ सूत्रम्- वा द्रुह-मुह-ष्णुह-ष्णिहाम्॥ (८,२.३३)

❖ सूत्रार्थः- एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु॥ एवं मुक्, मुग् इत्यादि॥

द्रुह्+ स् (हल्ङ्याभ्यो..)
द्रुघ् (वा द्रुह-मुह....)
ध्रुघ् ध्रुढ् (एकाचो बशो ..)
ध्रुग् ध्रुड् (झलां जशोऽन्ते)
ध्रुक् ध्रुट् (वाऽवसाने)
1.ध्रुक् 2. ध्रुग् 3.ध्रुट् 4.ध्रुड्

❖ घत्वम्
❖ ढत्वम्

द्रुह् + सु (प)
द्रुघ्+ सु (वा द्रुह-मुह....)
ध्रुघ्+ सु ध्रुढ्+ सु (एकाचो बशो ..)
ध्रुग्+ सु ध्रुड्+ सु (झलां जशोऽन्ते)
ध्रुड् ध् + सु (डः सि धुट्)
ध्रुक्+ सु , ध्रुट् त् + सु/ ध्रुट्+ सु (खरि च)
ध्रुक् + षु (आदेशप्रत्यययोः)
1.ध्रुक्षु 2.ध्रुट्त्सु 3.ध्रुट्सु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु ‘ष्णुह्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्नुक्, स्नुग्<br>स्नुट्, स्नुड् | स्नुहौ | स्नुहः |
| सम्बोधनम् | हे स्नुक्, हे स्नुग्<br>हे स्नुट्, हे स्नुड् | हे स्नुहौ | हे स्नुहः |
| द्वितीया | स्नुहम् | स्नुहौ | स्नुहः |
| तृतीया | स्नुहा | स्नुग्भ्याम्, स्नुड्भ्याम् | स्नुग्भिः, स्नुड्भिः |
| चतुर्थी | स्नुहे | स्नुग्भ्याम्, स्नुड्भ्याम् | स्नुग्भ्यः, स्नुड्भ्यः |
| पञ्चमी | स्नुहः | स्नुग्भ्याम्, स्नुड्भ्याम् | स्नुग्भ्यः, स्नुड्भ्यः |
| षष्ठी | स्नुहः | स्नुहोः | स्नुहाम् |
| सप्तमी | स्नुहि | स्नुहोः | स्नुक्षु, स्नुट्त्सु, स्नुट्सु |

- सूत्रम्- धात्वादेः षः सः॥ (६,१.६४)
- सूत्रार्थः- (धातोरादेः षस्य सः स्यात्।)
- स्नुक्, स्नुग्, स्नुट्, स्नुड्।
- एवं स्निक्, स्निग्, स्निट्, स्निड्॥

- घत्वम्
- ढत्वम्

निमित्तापाये= कारणस्य नाशे
नैमित्तिकस्यापि= निमित्ताद् उत्पन्नकार्यस्यापि
अपायः।= वर्तमानस्वरूपनाशः (पूर्वस्वरूपप्राप्तिः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'विश्ववाह्'शब्दस्य रूपाणि

## लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | विश्ववाट्-ड् | विश्ववाहौ | विश्ववाहः |
| सम्बोधनम् | हे विश्ववाट्-ड् | हे विश्ववाहौ | हे विश्ववाहः |
| द्वितीया | विश्ववाहम् | विश्ववाहौ | विश्वौहः |
| तृतीया | विश्वौह् + आ = विश्वौहा | विश्ववाड्भ्याम् | विश्ववाड्भिः |
| चतुर्थी | विश्वौह् + ए = विश्वौहे | विश्ववाड्भ्याम् | विश्ववाड्भ्यः |
| पञ्चमी | विश्वौहः | विश्ववाड्भ्याम् | विश्ववाड्भ्यः |
| षष्ठी | विश्वौह् + अस् = विश्वौहः | विश्वौह् + ओस् = विश्वौहोः | विश्वौह् + आम् = विश्वौहाम् |
| सप्तमी | विश्वौह् + इ = विश्वौहि | विश्वौहोः | विश्ववाट्त्सु-ट्सु |

- ❖ विश्ववाट्, विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ॥
- ❖ सूत्रम्- **इग्यणः सम्प्रसारणम्॥ (१,१.४५)**
- ❖ सूत्रार्थः- (सम्प्रसारणशब्देन) यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात्॥
- ❖ सूत्रम्- वाह ऊठ्॥ (६,४.१३२)
- ❖ सूत्रार्थः- भस्य वाहः सम्प्रसारणम् (भावी) ऊठ्॥
- ❖ सूत्रम्- **सम्प्रसारणाच्च॥ (६,१.१०८)**
- ❖ सूत्रार्थः- सम्प्रसारणादचि पूर्वरूपमेकादेशः।
- ❖ एत्येधत्यूठ्स्विति वृद्धिः। विश्वौहः, इत्यादि॥




- ❖ **ढत्वम्,जश्त्वम्**
- ❖ **सम्प्रसारणम्**

विश्ववाह्+ अस् (यचि भम्)

विश्व ऊ आ ह्+ अस् (वाह ऊठ्)

विश्व ऊ ह्+ अस् (सम्प्रसारणाच्च)

विश्व् औ ह्+ अस् (एत्येधत्यूठ्सु)

विश्वौहः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'अनडुह्'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

- सूत्रम्- चतुरनडुहोरामुदात्तः॥ (७,१.९८)
- सूत्रार्थः- अनयोराम् स्यात्सर्वनामस्थाने परे॥
- सूत्रम्- सावनडुहः॥ (७,१.८२)
- सूत्रार्थः- अस्य नुँम् स्यात् सौ परे। अनड्वान्॥
- सूत्रम्- अम् संबुद्धौ॥ (७,१.९९)
- सूत्रार्थः- (चतुर्-अनडुहोर्- 'अम्' स्यात् सम्बुद्धौ।) हे अनड्वन्। हे अनड्वाहौ। हे अनड्वाहः। अनडुहः। अनडुहा॥
- सूत्रम्- वसुँस्रंसुँध्वंस्वनडुहां दः॥ (८,२.७२)
- सूत्रार्थः- सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि॥
- सान्तेति किम् ? विद्वान्। पदान्ते किम्? स्रस्तम्। ध्वस्तम्॥

अनडुह्+ स्
अनडु आ ह्+ स् (चतुरनडुहोरामुदात्तः)
अनड् व् आ ह्+ स् (इको यणचि)
अनड्वा न् ह्+ स् (सावनडुहः)
अनड्वा न् ह्+ (हल्ङ्याब्भ्यो.. ६.१.६८)
अनड्वा न् + (संयोगान्तस्य लोपः-८.२.२३)
(नलोपः प्रातिपदिकान्तस्य-८.२.७) ✗
**अनड्वान्**

हे अनडुह्+ स्
हे अनडु अ ह्+ स् (अम् संबुद्धौ)
हे अनड् व् अ ह्+ स्
हे अनड्व न् ह्+ स्
हे अनड्व न् ह्+
हे अनड्व न् +
**हे अनड्वन्**

अनडुह्+ औ
अनडु आ ह्+ औ (चतुरनडुहोरामुदात्तः)
अनड् व् आ ह्+ औ (इको यणचि)
**अनड्वाहौ**

अनडुह्+ भ्याम्
अनडुद्+ भ्याम् (वसुँस्रंसुँध्वंस्वनडुहां दः)
**अनडुद्भ्याम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु ‘अनडुह्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अनड्वान् | अनड्वाहौ | अनड्वाहः |
| सम्बोधनम् | हे अनड्वन् | हे अनड्वाहौ | हे अनड्वाहः |
| द्वितीया | अनड्वाहम् | अनड्वाहौ | अनडुहः |
| तृतीया | अनडुहा | अनडुद्भ्याम् | अनडुद्भिः |
| चतुर्थी | अनडुहे | अनडुद्भ्याम् | अनडुद्भ्यः |
| पञ्चमी | अनडुहः | अनडुद्भ्याम् | अनडुद्भ्यः |
| षष्ठी | अनडुहः | अनडुहोः | अनडुहाम् |
| सप्तमी | अनडुहि | अनडुहोः | अनडुत्सु |

- चतुरनडुहोरामुदात्तः- आम्
- सावनडुहः- नुँम्
- अम् संबुद्धौ- अम्
- वसुँस्रंसुँध्वंस्वनडुहां दः- दत्वम्
- खरि च- चर्त्वम्

# हकारान्तेषु 'तुरासाह्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | तुराषाट्-ड् | तुरासाहौ | तुरासाहः |
| सम्बोधनम् | हे तुराषाट्-ड् | हे तुरासाहौ | हे तुरासाहः |
| द्वितीया | तुरासाहम् | तुरासाहौ | तुरासाहः |
| तृतीया | तुरासाहा | तुराषाड्भ्याम् | तुराषाड्भिः |
| चतुर्थी | तुरासाहे | तुराषाड्भ्याम् | तुराषाड्भ्यः |
| पञ्चमी | तुरासाहः | तुराषाड्भ्याम् | तुराषाड्भ्यः |
| षष्ठी | तुरासाहः | तुरासाहोः | तुरासाहाम् |
| सप्तमी | तुरासाहि | तुरासाहोः | तुराषाट्त्सु-ट्सु |

- सूत्रम्- सहेः साडः सः॥ (८,३.५६)
- सूत्रार्थः- साडरूपस्य सहेः सस्य मूर्धन्यादेशः।
- तुराषाट्, तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि॥

- सहेः साडः सः- ष् (ढत्वं जश्त्वम्)
- वाऽवसाने- वैकल्पिकचर्त्वम्।
- डः सि धुँट्,खरि च- धुँट्, चर्त्वम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# वकारान्तेषु 'सुदिव्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुद्यौः | सुदिवौ | सुदिवः |
| सम्बोधनम् | हे सुद्यौः | हे सुदिवौ | हे सुदिवः |
| द्वितीया | सुदिवम् | सुदिवौ | सुदिवः |
| तृतीया | सुदिवा | सुद्युभ्याम् | सुद्युभिः |
| चतुर्थी | सुदिवे | सुद्युभ्याम् | सुद्युभ्यः |
| पञ्चमी | सुदिवः | सुद्युभ्याम् | सुद्युभ्यः |
| षष्ठी | सुदिवः | सुदिवोः | सुदिवाम् |
| सप्तमी | सुदिवि | सुदिवोः | सुद्युषु |

- सूत्रम्- दिव औत्॥ (७,१.८४)
- सूत्रार्थः- दिविति प्रातिपदिकस्यौत्स्यात्सौ।
- सुद्यौः। सुदिवौ॥
- सूत्रम्- दिव उत्॥ (६,१.१३१)
- सूत्रार्थः- दिवोऽन्तादेश उकारः स्यात् पदान्ते।
- सुद्युभ्यामित्यादि॥

सुदिव्+ स्
सुदि औ+ स् (इको यणचि- यण्)
सुद्यौः

सुदिव्+ भ्याम्
सुदि उ+ भ्याम्
सुद्युभ्याम्

- दिव औत्- औ
- दिव उत्- उ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रेफान्तेषु 'चतुर्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | चत्वारः |
| द्वितीया | चतुरः |
| तृतीया | चतुर्भिः |
| चतुर्थी | चतुर्भ्यः |
| पञ्चमी | चतुर्भ्यः |
| षष्ठी | चतुर्ण्णाम्<br>चतुर्णाम् |
| सप्तमी | चतुर्षु |

- चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥
- सूत्रम्- षट्चतुर्भ्यश्च॥ (७,१.५५)
- सूत्रार्थः- एभ्य आमो नुँडागमः॥
- सूत्रम्- रषाभ्यां नो णः समानपदे॥ (८,४.१)
- सूत्रार्थः- (रेफषकाराभ्यां परस्य नस्य णः स्यादेकपदे।) (अचो रहाभ्यां द्वे॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः।)
- चतुर्ण्णाम्, चतुर्णाम्॥
- सूत्रम्- रोः सुपि॥ (८,३.१६)
- सूत्रार्थः- रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥
- सूत्रम्- शरोऽचि॥ (८,४.४९)
- सूत्रार्थः- अचि परे शरो न द्वे स्तः। चतुर्षु॥

चतुर्+ अस् (चतुरनडुहोरामुदात्तः)
चतु आ र्+ अस्
चत्वारः

चतुर्+ आम्
चतुर् +न् आम्
चतुर् +ण् आम्
चतुर् + ण् ण् आम्
1.चतुर्ण्णाम्
2.चतुर्णाम्

चतुर्+ सु
चतुर्+ षु = चतुर्षु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु 'प्रशाम्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रशान् | प्रशामौ | प्रशामः |
| सम्बोधनम् | हे प्रशान् | हे प्रशामौ | हे प्रशामः |
| द्वितीया | प्रशामम् | प्रशामौ | प्रशामः |
| तृतीया | प्रशामा | प्रशान्भ्याम् | प्रशान्भिः |
| चतुर्थी | प्रशामे | प्रशान्भ्याम् | प्रशान्भ्यः |
| पञ्चमी | प्रशामः | प्रशान्भ्याम् | प्रशान्भ्यः |
| षष्ठी | प्रशामः | प्रशामोः | प्रशामाम् |
| सप्तमी | प्रशामि | प्रशामोः | १.प्रशान्त्सु<br>२.प्रशान्सु |

❖ सूत्रम्- मो नो धातोः॥ (८,२.६४)

❖ सूत्रार्थः- धातोर्मस्य नः (स्यात्) पदान्ते।

❖ प्रशान्॥

❖ शमुँ उपशमे (दिवादिगणे, परस्मैपदी)

प्रशाम्+ स्
प्रशान्

प्रशाम्+ सु
प्रशान् + ध् सु (नश्च)
प्रशान् + त् सु
१.प्रशान्त्सु २.प्रशान्सु

❖ मो नो धातोः-न्
❖ नश्च- धुँट्, चर्त्व

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु ‘किम्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | कः | कौ | के |
| द्वितीया | कम् | कौ | कान् |
| तृतीया | केन | काभ्याम् | कैः |
| चतुर्थी | कस्मै | काभ्याम् | केभ्यः |
| पञ्चमी | कस्मात्-द् | काभ्याम् | केभ्यः |
| षष्ठी | कस्य | कयोः | केषाम् |
| सप्तमी | कस्मिन् | कयोः | केषु |

- ❖ सूत्रम्- किमः कः॥ (७,२.१०३)
- ❖ सूत्रार्थः- किमः कः स्याद्विभक्तौ।
- ❖ कः। कौ। के इत्यादि। शेषं सर्ववत्॥

किम्+ स्
क + स्
कः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु ‘इदम्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | इदम्+ स्<br>इद् अम्+ स्<br>अय् अम्+ स्<br>**अयम्** | इदम्+ औ<br>इद अ + औ<br>अ<br>इद+ औ<br>इम+ औ<br>**इमौ** | इदम्+ अस्<br>इद अ + अस्<br>इद् अ+ अस्<br>इद+ अस्<br>इम+ ई (शी)<br>**इमे** |
| द्वितीया | इदम्+ अम्<br>इद अ + अम्<br>इद+ अम्<br>इम+ अम्<br>**इमम्** | **इमौ** | इदम्+ अस्<br>इद अ + अस्<br>इद+ अस्<br>इम+ अस्<br>**इमान्** |

- ❖ सूत्रम्- **इदमो मः॥ (७,२.१०८)**
- ❖ सूत्रार्थः- (इदमो मस्य मः स्यात्) सौ।
- ❖ (अयं विधिः) त्यदाद्यत्वापवादः॥
- ❖ सूत्रम्- **इदोऽय् पुंसि॥ (७,२.१११)**
- ❖ सूत्रार्थः- इदम इदोऽय् सौ पुंसि। अयम्।
- ❖ (प्रथमाया द्विवचने) त्यदाद्यत्वे (कृते)॥
- ❖ सूत्रम्- **अतो गुणे॥ (६,१.९७)**
- ❖ सूत्रार्थः- अपदान्तादतो गुणे पररूपमेकादेशः॥
- ❖ सूत्रम्- **दश्च॥ (७,२.१०९)**
- ❖ सूत्रार्थः- इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे।
- ❖ त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः॥
- ❖ (त्यद् तद् यद् एतद् इदम् अदस् एक द्वि)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु 'इदम्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृतीया | इदम्+ आ<br>इद अ + आ<br>इद+ आ<br>अन् अ+ इन<br>अनेन | इदम्+ भ्याम्<br>इद + भ्याम्<br>अ + भ्याम्<br>आ + भ्याम्<br>आभ्याम् | इदम्+ भिस्<br>इदम्+ भिस्<br>अ + भिस्<br>ए + भिस्<br>एभिः |
| चतुर्थी | अस्मै | आभ्याम् | एभ्यः |
| पञ्चमी | अस्मात्-द् | आभ्याम् | एभ्यः |
| षष्ठी | अस्य | अनयोः | एषाम् |
| सप्तमी | अस्मिन् | अनयोः | एषु |

- सूत्रम्- अनाप्यकः॥ (पदच्छेदः- अन् आपि अकः)
- सूत्रार्थः- अककारस्येदम इदोऽनापि विभक्तौ। आबिति प्रत्याहारः। अनेन॥
- सूत्रम्- हलि लोपः॥ (७,२.११३)
- सूत्रार्थः- अककारस्येदम इदो लोप आपि हलादौ।
- परिभाषा- नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे॥
- सूत्रम्- आद्यन्तवदेकस्मिन्॥ (पदच्छेदः- आद्यन्तवद् एकस्मिन्)
- सूत्रार्थः- एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात्। सुपि चेति दीर्घः। आभ्याम्॥
- आदावन्ते च सति यत्कार्यं भवति, तद् असहायेऽपि स्यात्।
- सूत्रम्- नेदमदसोरकोः॥ (पदच्छेदः- न इदम्-अदसोः अकोः)
- सूत्रार्थः- अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अस्मै। एभ्यः। अस्मात्। अस्य। अनयोः। एषाम्। अस्मिन्। अनयोः। एषु॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इदम्- एतद्-अदस्-तद् इत्येषां प्रयोगविज्ञानम्

**लघुसिद्धान्तकौमुद्याम् (हलन्तपुँल्लिङ्गाः)**



अयं वृक्षः / इदं फलम्।

एषः वृक्षः स्थूलः।



- १] इदम् = समीपस्थ वस्तु के लिए
- २] एतद् = अत्यन्त समीपस्थ वस्तु के लिए

❖ "इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥"

- ३] अदस् = दूरस्थ वस्तु के लिए
- ४] तद् = परोक्ष अर्थात् जो आपको दिखाई न दे ऐसी वस्तु के लिए।



असौ ध्वजः प्रतीयते।

तत् किम्? (न दृश्यते)



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु ‘इदम्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अयम् | इमौ | इमे |
| द्वितीया | इमम्/ एनम् | इमौ/ एनौ | इमान्/ एनान् |
| तृतीया | अनेन/ एनेन | आभ्याम् | एभिः |
| चतुर्थी | अस्मै | आभ्याम् | एभ्यः |
| पञ्चमी | अस्मात्-द् | आभ्याम् | एभ्यः |
| षष्ठी | अस्य | अनयोः/ एनयोः | एषाम् |
| सप्तमी | अस्मिन् | अनयोः/ एनयोः | एषु |

- ❖ इदोऽय् पुंसि
- ❖ दश्च

- ❖ अनाप्यकः
- ❖ हलि लोपः

- ❖ (अन्वादेशविषये)
- ❖ नेदमदसोरकोः

❖ सूत्रम्- द्वितीयाटौस्स्वेनः॥ (द्वितीया-टा-ओस्सु-एनः)

❖ सूत्रार्थः- (द्वितीया-टा-ओस् विभक्तिषु परेषु) इदमेतदोरन्वादेशे (‘एन’ आदेशः स्यात्)।

❖ किञ्चित्कार्यं= व्याकरणाध्ययनादिरूपं विधातुम्= अज्ञातं बोधयितुम् उपात्तस्य= उच्चरितस्य इदमादिशब्दस्य (पुनः) कार्यान्तरं= छन्दोऽध्ययनादिरूपं विधातुं पुनरुपादानम्= पुनरिदमादिशब्दोच्चारणम् अन्वादेशः।

❖ यथा - अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति॥

❖ एनम्। एनौ। एनान्। एनेन। एनयोः। एनयोः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'राजन्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | राजा | राजानौ | राजानः |
| सम्बोधनम् | हे राजन् | हे राजानौ | हे राजानः |
| द्वितीया | राजानम् | राजानौ | राज्ञः |
| तृतीया | राज्ञा | राजभ्याम् | राजभिः |
| चतुर्थी | राज्ञे | राजभ्याम् | राजभ्यः |
| पञ्चमी | राज्ञः | राजभ्याम् | राजभ्यः |
| षष्ठी | राज्ञः | राज्ञोः | राज्ञाम् |
| सप्तमी | १.राज्ञि,२.राजनि | राज्ञोः | राजसु |

- ❖ राजा
- ❖ सूत्रम्- न ङिसम्बुद्ध्योः॥ (८,२.८)
- ❖ सूत्रार्थः- नस्य लोपो न ङौ सम्बुद्धौ च। हे राजन्।
- ❖ वार्त्तिकम्- (ङावुत्तरपदे= उत्तरपदपरके ङौ परे, 'न ङिसम्बुद्ध्योः' प्रतिषेधो वक्तव्यः)। ब्रह्मनिष्ठः।
- ❖ राजानौ। राजानः। राज्ञः॥

राजन्+ स्
राजान्+ स् (उपधादीर्घः)
राजान्+ (हल्ङ्यादिलोपः)
राजा (नलोपः)

राजन्+ अस्
राज् न्+ अस् (अल्लोपोऽनः)
राज् ञ्+ अस् (श्चुत्वम्)
राज्ञः

ब्रह्मणि निष्ठा यस्य सः

ब्रह्मन्+ङि निष्ठा+ सुँ

❖ उपधादीर्घः ❖ नलोपः ❖ अनः-अकारलोपः ❖ विभाषा ङिश्योः ❖ न ङिसम्बुद्ध्योः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु ‘राजन्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

- **सूत्रम्- नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति॥ (८,२.२)**
- सूत्रार्थः- १.सुब्विधौ (सुप्परे विधिः,सुप्स्थाने विधिः) २.स्वरविधौ ३.संज्ञाविधौ ४.कृति तुग्विधौ च (‘वृत्रहभ्याम्’ इत्यत्र प्रत्ययलक्षणेन क्विँप्परत्वमादाय ह्रस्वस्य पिति कृति तुँक् इत्यनेन तुँक् प्राप्नोति, नलोपस्य असिद्धत्वान्न भवति।) नलोपोऽसिद्धो,नान्यत्र – राजाश्व इत्यादौ।
- इत्यसिद्धत्वाद् आत्वम् एत्वम् ऐस्त्वं च न। राजभ्याम्। राजभिः। राज्ञि, राजनि। राजसु॥

राजन्+ भ्याम्

राज+ भ्याम् (नलोपः प्रातिपदिकान्तस्य-8.2.7)

**राजभ्याम्** ~~(सुपि च-7.3.102)~~

राज्ञः अश्वः

राजन् ङस् अश्व सुँ

राज अश्व

**राजाश्वः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'यज्वन्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | यज्वा | यज्वानौ | यज्वानः |
| सम्बोधनम् | हे यज्वन् | हे यज्वानौ | हे यज्वानः |
| द्वितीया | यज्वानम् | यज्वानौ | यज्वनः |
| तृतीया | यज्वना | यज्वभ्याम् | यज्वभिः |
| चतुर्थी | यज्वने | यज्वभ्याम् | यज्वभ्यः |
| पञ्चमी | यज्वनः | यज्वभ्याम् | यज्वभ्यः |
| षष्ठी | यज्वनः | यज्वनोः | यज्वनाम् |
| सप्तमी | यज्वनि | यज्वनोः | यज्वसु |

❖ उपधादीर्घः ❖ नलोपः ❖ न संयोगाद्वमन्तात् ❖ न ङिसम्बुद्ध्योः

❖ यज्वा। यज्वानौ। यज्वानः॥

❖ सूत्रम्- न संयोगाद्वमन्तात्॥ (६,४.१३७)

❖ सूत्रार्थः- व्-म्-अन्तसंयोगादनोऽकारस्य लोपो न।

❖ यज्वनः। यज्वना। यज्वभ्याम्॥

(मान्तसंयोगस्योदाहरणम्– ब्रह्मन्)

ब्रह्मा, ब्रह्माणौ , ब्रह्माणः

❖ ब्रह्माणम्, ब्रह्माणौ ,ब्रह्मणः।

❖ ब्रह्मणा ब्रह्मभ्याम्॥इत्यादीनि।



यज्वन्+ स्
यज्वान्+ स्(उपधादीर्घः)
यज्वान्+(हल्ङ्यादिलोपः)
यज्वा (नलोपः)

यज्वन् + अस् (~~अल्लोपोऽनः~~)
यज्व् अन्
यज्वन् + अस् (न संयोगाद्वमन्तात्)
यज्वनः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'वृत्रहन्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | वृत्रहा | वृत्रहणौ | वृत्रहणः |
| सम्बोधनम् | हे वृत्रहन् | हे वृत्रहणौ | हे वृत्रहणः |
| द्वितीया | वृत्रहणम् | वृत्रहणौ | वृत्रघ्नः |
| तृतीया | वृत्रघ्ना | वृत्रहभ्याम् | वृत्रहभिः |
| चतुर्थी | वृत्रघ्ने | वृत्रहभ्याम् | वृत्रहभ्यः |
| पञ्चमी | वृत्रघ्नः | वृत्रहभ्याम् | वृत्रहभ्यः |
| षष्ठी | वृत्रघ्नः | वृत्रघ्नोः | वृत्रघ्नाम् |
| सप्तमी | वृत्रघ्नि,वृत्रहणि | वृत्रघ्नोः | वृत्रहसु |

❖ उपधादीर्घः ❖ नलोपः ❖ अनः-अकारलोपः ❖ विभाषा ङिश्योः

❖ सूत्रम्- इन्हन्पूषार्यम्णां शौ॥ (६,४.१२)

❖ सूत्रार्थः- एषां= (इन्नन्त-हन्शब्दान्त- पूषन्शब्दान्त-अर्यमन्शब्दान्ताङ्गानां) शावेव (शौ एव/ शि परे एव) उपधाया दीर्घो , नान्यत्र। इति निषेधे प्राप्ते -

❖ ('सर्वनामस्थाने चासम्बुद्धौ' इत्यनेन उपधादीर्घे) सिद्धे सति (उपधा-दीर्घार्थम् 'इन्हन्पूषार्यम्णां शौ' इत्यस्य पुनर्) आरम्भो नियमार्थः।

❖ सूत्रम्- सौ च॥ (६,४.१३)

❖ सूत्रार्थः- इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ। वृत्रहा। हे वृत्रहन्॥

❖ सूत्रम्- एकाजुत्तरपदे णः॥ (८,४.१२)

❖ सूत्रार्थः- एकाजुत्तरपदं यस्य तस्मिन्समासे, पूर्वपदस्थान्निमित्तात्परस्य १.प्रतिपदिकान्त-२.नुँम्- ३.विभक्तिस्थस्य नस्य णः (स्यात्)। वृत्रहणौ॥

❖ समन्वयः— 'वृत्रहन्+ औ' इति स्थिते अत्र एकाजुत्तरपदं= 'हन्' इति, तस्मिन् समासे= 'वृत्रहन्' इति, अत्र समुदाये पूर्वपदं= 'वृत्र' इति, पूर्वपदस्थं निमित्तं = रेफः, तस्मात् परस्य प्रातिपदिकान्तनकारस्य= हनो नकारस्य णकारो भवति। *(इन्हन्पूषार्यम्णां शौ इति नियमेनात्रोपधादीर्घो न)*

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'वृत्रहन्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

वृत्रहन्+ शस्
वृत्रहन्+ अस् (~~एकाजुत्तरपदे णः -८,४.१२~~)
वृत्रह् न्+ अस् (अल्लोपोऽनः-६.४.१३४)
वृत्रघ् न्+ अस् (हो हन्तेर्ञ्णिन्नेषु)
वृत्रघ्नः

- सूत्रम्- हो हन्तेर्ञ्णिन्नेषु॥ (७,३.५४)
- सूत्रार्थः- ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् (आन्तरतम्याद् घकारः स्यात्)। वृत्रघ्नः इत्यादि।
- एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्॥

वृत्रहन्+ ~~क्विँप्~~ (ब्रह्मभ्रूणवृत्रेषु क्विँप्)
वृत्रह+ भ्याम् (नलोपः प्रातिपदिकान्तस्य-8.2.7)
वृत्रहभ्याम् (~~ह्रस्वस्य पिति कृति तुँक्~~)

ह्
घ्
कुत्वम्

ञित्प्रत्यये
णित्प्रत्यये
नकारे

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु ‘शार्ङ्गिन्’शब्दस्य रुपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | शार्ङ्गी | शार्ङ्गिणौ | शार्ङ्गिणः |
| सम्बोधनम् | हे शार्ङ्गिन् | हे शार्ङ्गिणौ | हे शार्ङ्गिणः |
| द्वितीया | शार्ङ्गिणम् | शार्ङ्गिणौ | शार्ङ्गिणः |
| तृतीया | शार्ङ्गिणा | शार्ङ्गिभ्याम् | शार्ङ्गिभिः |
| चतुर्थी | शार्ङ्गिणे | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः |
| पञ्चमी | शार्ङ्गिणः | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः |
| षष्ठी | शार्ङ्गिणः | शार्ङ्गिणोः | शार्ङ्गिणाम् |
| सप्तमी | शार्ङ्गिणि | शार्ङ्गिणोः | शार्ङ्गिषु |

- नलोपः
- सौ च- उपधादीर्घः
- पदान्तस्य- णत्वं न
- अट्कुप्वाङ्..- णत्वम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु ‘यशस्विन्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | यशस्वी | यशस्विनौ | यशस्विनः |
| सम्बोधनम् | हे यशस्विन् | हे यशस्विनौ | हे यशस्विनः |
| द्वितीया | यशस्विनम् | यशस्विनौ | यशस्विनः |
| तृतीया | यशस्विना | यशस्विभ्याम् | यशस्विभिः |
| चतुर्थी | यशस्विने | यशस्विभ्याम् | यशस्विभ्यः |
| पञ्चमी | यशस्विनः | यशस्विभ्याम् | यशस्विभ्यः |
| षष्ठी | यशस्विनः | यशस्विनोः | यशस्विनाम् |
| सप्तमी | यशस्विनि | यशस्विनोः | यशस्विषु |

- नलोपः
- सौ च- उपधादीर्घः

यशोऽस्यास्तीति विग्रहे ‘यशस्’शब्दात् ‘अस्मायामेधास्रजो विनिँ’ इत्यनेन विनि प्रत्यये कृते ‘यशस्विन्’ इति निष्पद्यते। ‘समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः’ इति नियमेन ‘विन्’ इत्यर्थवान् तस्यैकदेशः ‘इन्’ अनर्थकः। तस्माद् इन्नन्तप्रयुक्तमुपधादीर्घं नात्र प्रसक्तम्। अत उच्यते— ‘अन्-इन्-अस्-मन्-ग्रहणान्यर्थवता तदन्तविधिं प्रयोजयन्ति।’ अर्थात्- ‘अन्-इन्-अस्-मन्’ इत्येषां सार्थकानां निरर्थकानां वा एतदन्तेषु कार्यं भवति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'मघवन्'शब्दस्य तृँत्वपक्षे रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुँल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | मघवान् | मघवन्तौ | मघवन्तः |
| सम्बोधनम् | हे मघवन् | हे मघवन्तौ | हे मघवन्तः |
| द्वितीया | मघवन्तम् | मघवन्तौ | मघवतः |
| तृतीया | मघवता | मघवद्भ्याम् | मघवद्भिः |
| चतुर्थी | मघवते | मघवद्भ्याम् | मघवद्भ्यः |
| पञ्चमी | मघवतः | मघवद्भ्याम् | मघवद्भ्यः |
| षष्ठी | मघवतः | मघवतोः | मघवताम् |
| सप्तमी | मघवति | मघवतोः | मघवत्सु |

- सूत्रम्- मघवा बहुलम्॥ (६,४.१२८)
- सूत्रार्थः- मघवन्शब्दस्य वा तृँ इत्यन्तादेशः। ऋ इत्॥
- सूत्रम्- उगिदचां सर्वनामस्थानेऽधातोः॥ (७,१.७०)
- सूत्रार्थः- अधातोरुगितो नलोपिनोऽञ्चतेश्च नुँम् स्यात्सर्वनामस्थाने परे।
- मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्। मघवद्भ्याम्।

मघवन्+ स्
मघवत् + स् (मघवा बहु..)
मघवन् त् + स्(उगिदचां..)
मघवन् त् + (हल्ङ्याभ्य..)
मघवन् (संयोगान्तस्य..)
मघवन् (सर्वनामस्थाने..)
मघवान्

धातुभिन्न- उगित्
उ ऋ ऌ

नकारलोपिनः
(अञ्चुँ-धातुः)
(अच्)

नुँम्

सर्वनामस्थाने परे

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'मघवन्'शब्दस्य तृँत्वाभावपक्षे रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | मघवा | मघवानौ | मघवानः |
| सम्बोधनम् | हे मघवन् | हे मघवानौ | हे मघवानः |
| द्वितीया | मघवानम् | मघवानौ | मघोनः |
| तृतीया | मघोना | मघवभ्याम् | मघवभिः |
| चतुर्थी | मघोने | मघवभ्याम् | मघवभ्यः |
| पञ्चमी | मघोनः | मघवभ्याम् | मघवभ्यः |
| षष्ठी | मघोनः | मघोनोः | मघोनाम् |
| सप्तमी | मघोनि | मघोनोः | मघवसु |

- तृँत्वाभावे मघवा। सुँटि राजवत्॥
- सूत्रम्- श्वयुवमघोनामतद्धिते॥ (६,४.१३३)
- सूत्रार्थः- अन्नन्तानां भसञ्ज्ञकानां/ भानामेषामतद्धिते संप्रसारणम्। मघोनः। मघवभ्याम्। (इत्यादि)
- एवं श्वन्। युवन्॥

मघवन्+ शस्

मघवन्+ अस् (श्वयुवमघोनामतद्धिते-सम्प्रसारणम्)

मघ उन्+ अस् (सम्प्रसारणाच्च- पूर्वरूपम्)

मघोन्+ अस् (आद्गुणः)

मघोनः

- राजवत्

- श्वयुवमघोनामतद्धिते

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'युवन्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | युवा | युवानौ | युवानः |
| सम्बोधनम् | हे युवन् | हे युवानौ | हे युवानः |
| द्वितीया | युवानम् | युवानौ | यूनः |
| तृतीया | यूना | युवभ्याम् | युवभिः |
| चतुर्थी | यूने | युवभ्याम् | युवभ्यः |
| पञ्चमी | यूनः | युवभ्याम् | युवभ्यः |
| षष्ठी | यूनः | यूनोः | यूनाम् |
| सप्तमी | यूनि | यूनोः | युवसु |

❖ राजवत्

❖ श्वयुवमघोनामतद्धिते

❖ सूत्रम्- न सम्प्रसारणे सम्प्रसारणम्॥ (६,१.३७)

❖ सूत्रार्थः- संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्।

❖ प्रश्नः- प्रथमं यकारस्य सम्प्रसारणं ततो वकारस्यपि सम्प्रसारणं कुतो न भवति ?

❖ उत्तरम्- अत एव= सूत्रारम्भ-सामर्थ्यादेव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः। यूना। युवभ्याम् इत्यादि॥

युवन्+ शस्

युवन्+ अस् (श्वयुवमघोनामतद्धिते-सम्प्रसारणम्)

यु उन्+ अस् (सम्प्रसारणाच्च- पूर्वरूपम्)

यून्+ अस् (अकः सवर्णे दीर्घः)

यूनः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु ‘अर्वन्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अर्वा | अर्वन्तौ | अर्वन्तः |
| सम्बोधनम् | हे अर्वन् | हे अर्वन्तौ | हे अर्वन्तः |
| द्वितीया | अर्वन्तम् | अर्वन्तौ | अर्वतः |
| तृतीया | अर्वता | अर्वद्भ्याम् | अर्वद्भिः |
| चतुर्थी | अर्वते | अर्वद्भ्याम् | अर्वद्भ्यः |
| पञ्चमी | अर्वतः | अर्वद्भ्याम् | अर्वद्भ्यः |
| षष्ठी | अर्वतः | अर्वतोः | अर्वताम् |
| सप्तमी | अर्वति | अर्वतोः | अर्वत्सु |

❖ उगिदचां- नुँम्

❖ सूत्रम्- अर्वणस्त्रसावनञः॥ (६,४.१२७)

❖ सूत्रार्थः- नञा रहितस्य ‘अर्वन्’ इत्यस्याङ्गस्य ‘तृँ’ इत्यन्तादेशो, न तु सौ।

❖ अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि॥

अर्वन् + औ
अर्वतृँ+ औ
अर्वत्+ औ
अर्व नुँम् त्+ औ
अर्व न् त्+ औ
अर्वन्तौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'पथिन्-मथिन्-ऋभुक्षिन्' शब्दानां रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पन्थाः* | पन्थानौ* | पन्थानः* |
| सम्बोधनम् | हे पन्थाः* | हे पन्थानौ* | हे पन्थानः* |
| द्वितीया | पन्थानम्* | पन्थानौ* | पथः |
| तृतीया | पथा | पथिभ्याम् | पथिभिः |
| चतुर्थी | पथे | पथिभ्याम् | पथिभ्यः |
| पञ्चमी | पथः | पथिभ्याम् | पथिभ्यः |
| षष्ठी | पथः | पथोः | पथाम् |
| सप्तमी | पथि | पथोः | पथिषु |

❖ पथिमथ्यृभुक्षामात्, इतोऽत्सर्वनामस्थाने* ❖ थो न्थः ❖ भस्य टेर्लोपः

❖ सूत्रम्- पथिमथ्यृभुक्षामात्॥ (७,१.८५)
❖ सूत्रार्थः- एषामाकारोऽन्तादेशः स्यात् सौ परे॥
❖ सूत्रम्- इतोऽत्सर्वनामस्थाने॥ (७,१.८६)
❖ सूत्रार्थः- पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे॥
❖ सूत्रम्- थो न्थः॥ (७,१.८७)
❖ सूत्रार्थः- पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने।
❖ पन्थाः। पन्थानौ। पन्थानः॥
❖ सूत्रम्- भस्य टेर्लोपः॥ (७,१.८८)
❖ सूत्रार्थः- भस्य पथ्यादेष्टेर्लोपः।
❖ पथः। पथा। पथिभ्याम्॥
❖ एवं मथिन्, ऋभुक्षिन्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'पथिन्-मथिन्-ऋभुक्षिन्'शब्दानां रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुंल्लिङ्गाः)

| | | |
|---|---|---|
| पथिन् + स् | मथिन् + स् | ऋभुक्षिन् + स् |
| पथि आ + स् | मथि आ + स् | ऋभुक्षि आ + स् |
| पथ आ + स् | मथ आ + स् | ऋभुक्ष आ + स् |
| पन्थ आ + स् | मन्थ आ + स् | |
| **पन्थाः** | **मन्थाः** | **ऋभुक्षाः** |

| | | |
|---|---|---|
| पथिन् + औ | मथिन् + औ | ऋभुक्षिन् + औ |
| पथन् + औ | मथन् + औ | ऋभुक्षन् + औ |
| पन्थन् + औ | मन्थन् + औ | |
| पन्थान् + औ | मन्थान् + औ | ऋभुक्षान् + औ |
| **पन्थानौ** | **मन्थानौ** | **ऋभुक्षाणौ** |

पथिन् + अस्
पथ् + अस् = **पथः**

- सूत्रम्- **पथिमथ्यृभुक्षामात्॥ (७,१.८५)**
- सूत्रार्थः- एषामाकारोऽन्तादेशः स्यात् सौ परे॥
- सूत्रम्- **इतोऽत्सर्वनामस्थाने॥ (७,१.८६)**
- सूत्रार्थः- पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे॥
- सूत्रम्- **थो न्थः॥ (७,१.८७)**
- सूत्रार्थः- पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने।
- पन्थाः। पन्थानौ। पन्थानः॥
- सूत्रम्- **भस्य टेर्लोपः॥ (७,१.८८)**
- सूत्रार्थः- भस्य पथ्यादेष्टेर्लोपः।
- पथः। पथा। पथिभ्याम्॥
- एवं मथिन्, ऋभुक्षिन्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'पञ्चन्'शब्दस्य प्रक्रिया

## लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | पञ्च |
| द्वितीया | पञ्च |
| तृतीया | पञ्चभिः |
| चतुर्थी | पञ्चभ्यः |
| पञ्चमी | पञ्चभ्यः |
| षष्ठी | पञ्चानाम् |
| सप्तमी | पञ्चसु |

- सूत्रम्- ष्णान्ता षट्॥ (१,१.२४)
- सूत्रार्थः- षान्ता नान्ता च संख्या षट्संज्ञा स्यात्।
- पञ्चन्शब्दो नित्यं बहुवचनान्तः। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। (षट्चतुर्भ्यश्च इत्यनेन) नुँट्॥
- सूत्रम्- नोपधायाः॥ (६,४.७)
- सूत्रार्थः- नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। पञ्चसु॥ (एवं सप्तन्, नवन्, दशन्) )

पञ्चन् + आम् (ष्णान्ता षट्)
पञ्चन् + नुँट् आम् (षट्चतुर्भ्यश्च)
पञ्चान् + नाम् (नोपधायाः)
पञ्चान् + नाम् (नलोपः प्राति...)
**पञ्चानाम्**

- षड्भ्यो लुक्

- षट्चतुर्भ्यश्च, नोपधायाः

पञ्चन् + अस् (ष्णान्ता षट्)
पञ्चन् + अस् (षड्भ्यो लुक्)
पञ्चन् (नलोपः प्रातिपदिकान्तस्य)
**पञ्च**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'अष्टन्'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | बहुवचनम् (आत्वपक्षे) | बहुवचनम् (अनात्वपक्षे) |
|---|---|---|
| प्रथमा | अष्टौ | अष्ट |
| द्वितीया | अष्टौ | अष्ट |
| तृतीया | अष्टाभिः | अष्टभिः |
| चतुर्थी | अष्टाभ्यः | अष्टभ्यः |
| पञ्चमी | अष्टाभ्यः | अष्टभ्यः |
| षष्ठी | अष्टानाम् | अष्टानाम् |
| सप्तमी | अष्टासु | अष्टसु |

❖ सूत्रम्- अष्टन आ विभक्तौ॥ (७,२.८४)

❖ सूत्रार्थः- (अष्टन्शब्दस्य) हलादौ (विभक्तौ आत्वं ) वा स्यात्॥

❖ सूत्रम्- अष्टाभ्य औश्॥ (७,१.२१)

❖ सूत्रार्थः- कृताकारादष्टनो= अष्टाशब्दात्परयोः जश्शसोरौश्।

❖ (हलादिविभक्तिषु आत्वविधानाज्जश्शसोरजादित्वाद्-आत्वं न संभवति अतः) अष्टभ्य इति वक्तव्ये= 'अष्टभ्य औश्' इत्येव निर्देष्टव्ये कृतात्वनिर्देशः= सूत्रकृता मात्रालाघवम् अनादृत्य यद् 'अष्टाभ्य' इति पठितं तेन जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ। अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टासु। आत्वाभावे अष्ट, पञ्चवत्॥

❖ अष्टाभ्य औश्

❖ षड्भ्यो लुक्

अष्टन् + अस्
अष्ट आ + अस्
अष्ट आ + औ
अष्टौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु 'ऋत्विज्'शब्दस्य रूपम्

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ऋत्विक्, ऋत्विग् | ऋत्विजौ | ऋत्विजः |
| सम्बोधनम् | हे ऋत्विक्, ऋत्विग् | हे ऋत्विजौ | हे ऋत्विजः |
| द्वितीया | ऋत्विजम् | ऋत्विजौ | ऋत्विजः |
| तृतीया | ऋत्विजा | ऋत्विग्भ्याम् | ऋत्विग्भिः |
| चतुर्थी | ऋत्विजे | ऋत्विग्भ्याम् | ऋत्विग्भ्यः |
| पञ्चमी | ऋत्विजः | ऋत्विग्भ्याम् | ऋत्विग्भ्यः |
| षष्ठी | ऋत्विजः | ऋत्विजोः | ऋत्विजाम् |
| सप्तमी | ऋत्विजि | ऋत्विजोः | ऋत्विक्षु |

ऋत्विज् + सु
ऋत्विग्+ सु
ऋत्विक् + सु
ऋत्विक्षु

ऋत्विज् + स्
ऋत्विग्
ऋत्विक्

# जकारान्तेषु ‘ऋत्विज्’शब्दस्य रूपम्



- सूत्रम्- **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च॥** (३,२.५९) (पदच्छेदः- ऋत्विज्-दधृष्-स्रज्-दिश्-उष्णिह्-अञ्चुँ-युजि-क्रुञ्चाम्)
- सूत्रार्थः- 1.एभ्यः क्विँन्, 2.अञ्चेः सुप्युपपदे, 3.युजिँक्रुञ्चोः, केवलयोः,4. क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ॥
- सिद्धप्रक्रियस्य निर्देशो निपातनम्। ( लक्षणं= सूत्रं विनैव निपतति= प्रवर्त्तते {लक्ष्येषु= प्रयोगेषु} इति निपातनम्)
- सूत्रम्- **कृदतिङ्॥** (पदच्छेदः-कृद् अतिङ्) (३,१.९३)
- सूत्रार्थः- अत्र=(३,१.९३) धात्वधिकारे तिङ् भिन्नः प्रत्ययः कृत्संज्ञः स्यात्॥
- सूत्रम्- **वेरपृक्तस्य॥** (पदच्छेदः-वेः अपृक्तस्य) (६,१.६७)
- सूत्रार्थः- अपृक्तस्य वस्य लोपः॥
- सूत्रम्- **क्विँन्प्रत्ययस्य कुः॥** (८,२.६२)
- सूत्रार्थः- क्विँन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते। ~~(अस्यासिद्धत्वाच् ‘चोः कुरि’ति (८.२.३०) कुत्वम्।)~~
- ऋत्विक्, ऋत्विग्। ऋत्विजौ।ऋत्विग्भ्याम्॥

ऋत्विज् + क्विँन्(हलन्त्यम्, उपदेशे.., लशक्व..)

ऋत्विज् + व्

ऋत्विज्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु ‘युज्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुँल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | युङ् | युञ्जौ | युञ्जः |
| सम्बोधनम् | हे युङ् | हे युञ्जौ | हे युञ्जः |
| द्वितीया | युञ्जम् | युञ्जौ | युजः |
| तृतीया | युजा | युग्भ्याम् | युग्भिः |
| चतुर्थी | युजे | युग्भ्याम् | युग्भ्यः |
| पञ्चमी | युजः | युग्भ्याम् | युग्भ्यः |
| षष्ठी | युजः | युजोः | युजाम् |
| सप्तमी | युजि | युजोः | युक्षु* |

❖ युजेरसमासे

❖ चोः कुः

❖ सूत्रम्- युजेरसमासे॥ (७,१.७१)

❖ सूत्रार्थः- युजेः सर्वनामस्थाने नुँम् स्यादसमासे।

❖ सुँलोपः। संयोगान्तलोपः। (क्विँन्प्रत्ययस्य कुः) कुत्वेन नस्य ङः। युङ्।

❖ अनुस्वार-परसवर्णौ। युञ्जौ। युञ्जः। युग्भ्याम्॥

| | |
|---|---|
| युज् + स् | युज् + औ |
| यु न् ज् + स् | यु न् ज् + औ |
| यु न् ज् | युं ज् + औ |
| यु न् | युञ् ज् + औ |
| युङ् | युञ्जौ |

❖ *चोः कुः, आदेशप्रत्यययोः ,खरि च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु 'सुयुज्'शब्दस्य रूपाणि (क्विँप्-प्रत्ययान्तः)

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुयुक्, सुयुग् | सुयुजौ | सुयुजः |
| सम्बोधनम् | हे सुयुक्, सुयुग् | हे सुयुजौ | हे सुयुजः |
| द्वितीया | सुयुजम् | सुयुजौ | सुयुजः |
| तृतीया | सुयुजा | सुयुग्भ्याम् | सुयुग्भिः |
| चतुर्थी | सुयुजे | सुयुग्भ्याम् | सुयुग्भ्यः |
| पञ्चमी | सुयुजः | सुयुग्भ्याम् | सुयुग्भ्यः |
| षष्ठी | सुयुजः | सुयुजोः | सुयुजाम् |
| सप्तमी | सुयुजि | सुयुजोः | सुयुक्षु* |

- सूत्रम्- चोः कुः॥ (८,२.३०)
- सूत्रार्थः- चवर्गस्य कवर्गः स्याज्झलि पदान्ते च।

सुयुक्, सुयुग्। सुयुजौ। सुयुग्भ्याम्॥

- चोः कुः

- *चोः कुः, आदेशप्रत्यययोः ,खरि च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु ‘खञ्ज्’शब्दस्य रूपाणि (क्विँप्-प्रत्ययान्तः)

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुँल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | खन् | खञ्जौ | खञ्जः |
| सम्बोधनम् | हे खन् | हे खञ्जौ | हे खञ्जः |
| द्वितीया | खञ्जम् | खञ्जौ | खञ्जः |
| तृतीया | खञ्जा | खन्भ्याम् | खन्भिः |
| चतुर्थी | खञ्जे | खन्भ्याम् | खन्भ्यः |
| पञ्चमी | खञ्जः | खन्भ्याम् | खन्भ्यः |
| षष्ठी | खञ्जः | खञ्जोः | खञ्जाम् |
| सप्तमी | खञ्जि | खञ्जोः | खन्त्सु, खन्सु |

❖ नश्च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु 'राज्'शब्दस्य रूपाणि (क्विँप्-प्रत्ययान्तः)

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | राट्, राड् | राजौ | राजः |
| सम्बोधनम् | हे राट्, राड् | हे राजौ | हे राजः |
| द्वितीया | राजम् | राजौ | राजः |
| तृतीया | राजा | राड्भ्याम् | राड्भिः |
| चतुर्थी | राजे | राड्भ्याम् | राड्भ्यः |
| पञ्चमी | राजः | राड्भ्याम् | राड्भ्यः |
| षष्ठी | राजः | राजोः | राजाम् |
| सप्तमी | राजि | राजोः | राट्त्सु,राट्सु |

❖ सूत्रम्- व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राजच्छशां षः॥

❖ सूत्रार्थः- (व्रश्चादीनां सप्तानां छ-शान्तयोश्च षकारोऽन्तादेशः स्यात् ) झलि पदान्ते च।

❖ जश्त्वचर्त्वे। राट्, राड्। राजौ। राजः। राड्भ्याम्॥

❖ एवं विभ्राट् (भ्राज्) , देवेट् (यज्), विश्वसृट् (सृज्) ॥

राज् + स्
राज् +
राष्
राड्-2
राट्-1

1. व्रश्च्
2. भ्रस्ज्
3. सृज्
4. मृज्
5. यज्
6. राज्
7. भ्राज्
8. छ्
9. श्

ष्

झल्

पदान्त

❖ व्रश्च-भ्रस्ज..., झलां जशोऽन्ते, चर्त्वे

❖ व्रश्च-भ्रस्ज.., झलां जशोऽन्ते, धुँट्, खरि च

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु 'राज्'शब्दस्य रूपाणि (क्विँप्-प्रत्ययान्तः)

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | परिव्राट्-ड् | परिव्राजौ | परिव्राजः |
| सम्बोधनम् | हे परिव्राट्-ड् | हे राजौ | हे राजः |
| द्वितीया | राजम् | राजौ | राजः |
| तृतीया | राजा | राड्भ्याम् | राड्भिः |
| चतुर्थी | राजे | राड्भ्याम् | राड्भ्यः |
| पञ्चमी | राजः | राड्भ्याम् | राड्भ्यः |
| षष्ठी | राजः | राजोः | राजाम् |
| सप्तमी | राजि | राजोः | राट्त्सु,राट्सु |

- उणादिसूत्रम्- (परौ व्रजेः षः पदान्ते-२१८)
- सूत्रार्थः- परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि। परिव्राट्। परिव्राजौ॥

- व्रश्च-भ्रस्ज..., झलां जशोऽन्ते, चर्त्वे
- व्रश्च-भ्रस्ज.., झलां जशोऽन्ते, धुँट्, खरि च

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# जकारान्तेषु 'भ्रस्ज्'शब्दस्य रूपाणि (क्विँप्-प्रत्ययान्तः)

लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.भृट्, 2.भृड् | भृज्जौ | भृज्जः |
| सम्बोधनम् | हे 1.भृट्, 2.भृड् | हे भृज्जौ | हे भृज्जः |
| द्वितीया | भृज्जम् | भृज्जौ | भृज्जः |
| तृतीया | भृज्जा | भृड्भ्याम् | भृड्भिः |
| चतुर्थी | भृज्जे | भृड्भ्याम् | भृड्भ्यः |
| पञ्चमी | भृज्जः | भृड्भ्याम् | भृड्भ्यः |
| षष्ठी | भृज्जः | भृज्जोः | भृज्जाम् |
| सप्तमी | भृज्जि | भृज्जोः | भृट्त्सु, भृट्सु |

❖ सूत्रम्- स्कोः संयोगाद्योरन्ते च॥ (८,२.२९)

❖ सूत्रार्थः- पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः।

❖ भृट्। सस्य श्चुत्वेन शः। झलां जश् झशि इति शस्य जः। भृज्जौ। भृड्भ्याम्॥

भ्रस्ज् + स् (हल्ङ्..)
भ्रस्ज् (स्कोः..)
भ्रज् (व्रश्च..)
भ्रष् (झलां जशोऽन्ते)
भ्रड् (वाऽवसाने..)
भ्रट्




भ्रस्ज् + औ
भ्रश्ज् + औ (स्तोः श्चुना श्चुः)
भ्रज्ज् + औ (झलां जश् झशि)
भृज्जौ

❖ व्रश्च-भ्रस्ज..., जश्त्वम्, लोपः चर्त्वम्

❖ व्रश्च-भ्रस्ज.., झलां जशोऽन्ते, लोपः, धुँट्, खरि च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु ‘त्यदादीनां’ रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्यः | त्यौ | त्ये |
| द्वितीया | त्यम् | त्यौ | त्यान् |
| तृतीया | त्येन | त्याभ्याम् | त्यैः |
| चतुर्थी | त्यस्मै | त्याभ्याम् | त्येभ्यः |
| पञ्चमी | त्यस्मात्-द् | त्याभ्याम् | त्येभ्यः |
| षष्ठी | त्यस्य | त्ययोः | त्येषाम् |
| सप्तमी | त्यस्मिन् | त्ययोः | त्येषु |

- त्यदाद्यत्वं पररूपत्वं च॥
- सूत्रम्- तदोः सः सावनन्त्ययोः॥ (७,२.१०६)
- सूत्रार्थः- त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ।
- स्यः। त्यौ। त्ये॥ (त्यद्)
- सः। तौ। ते॥ (तद्)
- यः। यौ। ये॥ (यद्)
- एषः। एतौ। एते॥ (एतद्) ( अन्वादेशे- एनम्। एनौ। एनान्। एनेन एनयोः-२)

त्यद् + स्
त्य अ + स्
त्य + स्
स्य + स्
स्यः

- त्यदाद्यत्वं पररूपत्वं च, तदोः सः सावनन्त्ययोः

- त्यदाद्यत्व-पररूपानन्तरं शेषं सर्ववत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु ‘एतद्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (हलन्तपुंल्लिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | एषः | एतौ | एते |
| द्वितीया | एतम्, एनम् | एतौ, एनौ | एतान्, एनान् |
| तृतीया | एतेन, एनेन | एताभ्याम् | एतैः |
| चतुर्थी | एतस्मै | एताभ्याम् | एतेभ्यः |
| पञ्चमी | एतस्मात्-द् | एताभ्याम् | एतेभ्यः |
| षष्ठी | एतस्य | एतयोः, एनयोः | एतेषाम् |
| सप्तमी | एतस्मिन् | एतयोः, एनयोः | एतेषु |

- त्यदाद्यत्वं पररूपत्वं च॥
- सूत्रम्- तदोः सः सावनन्त्ययोः॥ (७,२.१०६)
- सूत्रार्थः- त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ।
- स्यः। त्यौ। त्ये॥ (त्यद्)
- सः। तौ। ते॥ (तद्)
- यः। यौ। ये॥ (यद्)
- एषः। एतौ। एते॥ (एतद्) ( अन्वादेशे- एनम्। एनौ। एनान्। एनेन एनयोः-२)

त्यद् + स्
त्य अ + स्
त्य + स्
स्य + स्
स्यः

- त्यदाद्यत्वं पररूपत्वं च, तदोः सः सावनन्त्ययोः
- त्यदाद्यत्व-पररूपानन्तरं शेषं सर्ववत्
- अन्वादेशविषये

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# युष्मद्-अस्मद्- शब्दयोः प्रकृति-प्रत्यय-स्थानिककार्याणां विभाजनम्

## लघुसिद्धान्तकौमुद्याम् (हलन्तपुल्लिङ्गाः)

### प्रकृतिस्थाने कार्याणि

मपर्यन्तस्य (युष्म् + अङ्)
मपर्यन्तस्य (अस्म् + अङ्)

- ❖ सूत्रम्- त्वाहौ सौ ⟶ त्व, अह
- ❑ सूत्रम्- युवावौ द्विवचने ⟶ युव, आव
- ✓ सूत्रम्- यूयवयौ जसि ⟶ यूय, वय
- ➢ सूत्रम्- त्वमावेकवचने ⟶ त्व, म
- ○ सूत्रम्- तुभ्यमह्यौ ङयि ⟶ तुभ्य, मह्य
- § सूत्रम्- तवममौ ङसि ⟶ तव, मम

आत्वम्

- ▪ सूत्रम्- प्रथमायाश्च द्विवचने भाषायाम्
- ▪ सूत्रम्- द्वितीयायाञ्च
- ▪ सूत्रम्- युष्मदस्मदोरनादेशे
- ▪ सूत्रम्- योऽचि ⟶ यत्वम्
- ▪ सूत्रम्- शेषे लोपः ⟶ अन्त्यलोपः / टिलोपः



### प्रत्ययस्थाने कार्याणि

- ❖ सूत्रम्- ङेप्रथमयोरम् ⟶ अम्
- ❖ सूत्रम्- शसो न ⟶ न
- ❖ सूत्रम्- भ्यसोऽभ्यम् ⟶ अभ्यम्
- ❖ सूत्रम्- एकवचनस्य च ⟶ अत्
- ❖ सूत्रम्- पञ्चम्या अत् ⟶ अत्
- ❖ सूत्रम्- युष्मदस्मद्भ्यां ङसोऽश् ⟶ अ
- ❖ सूत्रम्- साम आकम् ⟶ आकम्



| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ❖ सुँ (स्) | ❑ औ | ✓ जस् (अस्) |
| द्वितीया | ➢ अम् | ❑ औट् (औ) | शस् (अस्) |
| तृतीया | ➢ टा (आ) | ❑ भ्याम् | भिस् |
| चतुर्थी | ○ ङे (ए) | ❑ भ्याम् | भ्यस् |
| पञ्चमी | ➢ ङसिँ (अस्) | ❑ भ्याम् | भ्यस् |
| षष्ठी | § ङस् (अस्) | ❑ ओस् | आम् |
| सप्तमी | ➢ ङि (इ) | ❑ ओस् | सुप् (सु) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु ‘युष्मद्-अस्मद्’शब्दयोः प्रक्रिया



❖ सूत्रम्- **ङेप्रथमयोरम्॥ (७,१.२८)**

❖ सूत्रार्थः- युष्मदस्मद्भ्यां परस्य ‘ङे’ इत्येतस्य प्रथमाद्वितीययोश्चामादेशः॥

❖ सूत्रम्- **त्वाहौ सौ॥ (७,२.९४)**

❖ सूत्रार्थः- अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः॥

❖ सूत्रम्- **शेषे लोपः॥ (७,२.९०)**

❖ सूत्रार्थः- एतयोष्टिलोपः। त्वम्। अहम्॥

❖ सूत्रार्थः- आत्व-यत्वनिमित्तेतरविभक्तौ परतो युष्मदष्मदोरन्त्यस्य लोपः स्यात्।

❖ सूत्रम्- **युवावौ द्विवचने॥ (७,२.८२)**

❖ सूत्रार्थः- द्वयोरुक्तावनयोः= द्वित्वार्थवाचिनोर्युष्मदस्मदोः मपर्यन्तस्य युवावौ स्तो विभक्तौ॥

❖ सूत्रम्- **प्रथमायाश्च द्विवचने भाषायाम्॥ (७,२.८८)**

❖ सूत्रार्थः- औङ्येतयोरात्वं लोके। युवाम्। आवाम्॥

| | |
|---|---|
| युष्मद् + स् | अस्मद् + स् |
| युष्मद् + अम् | अस्मद् + अम् |
| युष्म् अद् + अम् | अस्म् अद् + अम् |
| त्वद् + अम् | अहद् + अम् |
| त्व् + अम् | अह्+ अम् |
| **त्वम्** | **अहम्** |

| | |
|---|---|
| युष्मद् + औ | अस्मद् + औ |
| युष्म् अद् + अम् | अस्म् अद् + अम् |
| युव अद् + अम् | आव अद् + अम् |
| युवद् + अम् | आवद् + अम् |
| युव आ + अम् | आव आ + अम् |
| युवा + अम् | आवा + अम् |
| **युवाम्** | **आवाम्** |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु 'युष्मद्-अस्मद्'शब्दयोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(हलन्तपुल्लिङ्गाः)

- सूत्रम्- **यूयवयौ जसि॥ (७,२.९३)**
- सूत्रार्थः- अनयोर्मपर्यन्तस्य। यूयम्। वयम्॥
- सूत्रम्- **त्वमावेकवचने॥ (७,२.९७)**
- सूत्रार्थः- एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥
- सूत्रम्- **द्वितीयायाञ्च॥ (७,२.८७)**
- सूत्रार्थः- अनयोरात्स्यात्। त्वाम्। माम्॥
- सूत्रम्- **शसो न॥ (७,१.२९)**
- सूत्रार्थः- आभ्यां शसो नः स्यात्। अमोऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्॥
- सूत्रम्- **योऽचि॥ (७,२.८९)**
- सूत्रार्थः- अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया॥

| | |
|---|---|
| युष्मद् + जस् | अस्मद् + जस् |
| युष्म् अद् + अम् | अस्म् अद् + अम् |
| यूयद् + अम् | वयद् + अम् |
| यूय् + अम् | वय्+ अम् |
| **यूयम्** | **वयम्** |

| | |
|---|---|
| युष्म् अद् + अम् | अस्म् अद् + अम् |
| त्वद् + अम् | मद् + अम् |
| त्व आ + अम् | म आ + अम् |
| त्वा + अम् | मा+ अम् |
| **त्वाम्** | **माम्** |

| | |
|---|---|
| युष्मद् + शस् | अस्मद् + शस् |
| युष्मद् + न् स् | अस्मद् + न् स् |
| युष्म आ + न् स् | अस्म आ + न् स् |
| युष्मा + न् स् | अस्मा + न् स् |
| युष्मा + न् | अस्मा + न् |
| **युष्मान्** | **अस्मान्** |

| | |
|---|---|
| युष्म् अद् + आ | अस्म् अद् + आ |
| त्वद् + आ | मद् + आ |
| त्वय् + आ | मय् + आ |
| **त्वया** | **मया** |

